भेदेनाऽनुभवः । अन्यस्य त्वबोधस्तदाह इति दृष्टान्तत इति । स्वप्नदृष्टान्तेन सत्ये भगवत्स्वरूपे देहाद्भेदो निरूपितः । तत्र द्रष्टा भगवानेवेति । तर्हि शिरो जीवस्येत्यत्र किं प्रमाणम् ? तत्र द्वितीयो दृष्टान्तो यथा जले चन्द्रमस इति । यस्तु देहादिसंसारे जलप्राये अहमिति मन्यते तस्यैव कर्म्मादिर्न त्वाकाशस्थस्य । अतो भेदेऽपि जीवस्यव तच्छिरः । अस्याऽनर्थस्य निवृत्तिः स्वतो भवतीति तन्निवृत्त्युपाय उच्यत इत्याह तन्निवृत्तिप्रतिकार इति, "स वै निवृत्तिधर्मेण" (३-७-१२ इत्यादिना॥५६॥५७॥

मार्गद्वयेनानर्थनिवृत्तिः भक्तिमार्गेण ज्ञानमार्गेण च । तत्र प्रथमे शनैस्तिरोभाव इति मैत्रेयाभिप्रायः । सर्वतिरोभावस्तु भगवत्साक्षात्कारे । तदा न स्वप्नदर्शनम् । जागरणेऽपि न देहादावात्मबुद्धिः, किन्तु सुषुप्तिवत्सर्वदा ब्रह्मानन्दानुभवः । तत्र प्रथमपक्षे मुक्तिर्वक्तव्येति मैत्रेयः कैमुतिकन्यायेन "अशेषसंक्लेशशमम्" ३-७-१४ इति श्लोकेन निरूपयतीत्याह—

**निदर्शनं सुलभं साधनं च गूढा सूक्तिस्तेन वै तत्प्रकाशः ।**
**तदुक्तं वै दर्शनं यन्न भेद्यं सेवाहेतुः शास्त्रनिष्ठेयमाद्या ॥ ५८ ॥**

निदर्शन सुलभमिति । दृष्टान्तोऽत्र सुलभः । सर्वेषामेव भगवद्गुणानुवादे परमानन्दानुभवात् । साधनं च सुलभं सर्वत्र सतां भगवद्गुणकीर्तनस्य नित्यत्वात् । चकारान्नात्र देशाद्यपेक्षा । नन्वेवं सति कथं न सर्वेषामनर्थो निवर्तते तत्राह गूढा सूक्तिरिति । समीचीना भगवच्चरित्रोक्तिः, गूढा गुप्ता । तेनैव हि भगवत्प्रकाशः स च दुर्लभ इति न सर्वमुक्तिः अत एव भक्तिमार्गो दुर्लभ इति तद्दर्शनमुक्तम् । ज्ञानमार्ग उक्तः । तदपि तदेव दर्शनम् । यन्न भेद्यमात्मनो भेदं न भासयति । एवं मार्गद्वयस्यापि सेवा हेतुः । भगवत्सेवया द्वयमपि प्राप्यत इति । सापि सेवा शास्त्रनिष्ठा पञ्चरात्रोक्ता न स्वेच्छया यथाकथञ्चित्कृता । इयमाद्या प्रथमत एवं कर्तव्या । पश्चाद्भगवत्प्रसादे तदुक्तप्रकारेण स्वेच्छयापि सेवा भवतीत्यर्थः ॥ ५८ ॥

अयं सिद्धान्तो ज्ञातव्य इत्येवाभिप्रेत्य सर्वं पृष्टमित्याह—

**तदर्थमेव सकलं पृष्टं दुर्लभसङ्गतः ।**
**अतोऽपि न विसर्गत्वमन्यशेषाद्यवीयसाम् ॥ ५९ ॥**

तदर्थमेवेति । अनेन सर्गत्वमेव समर्थितमित्याह अतोऽपि न विसर्गत्वमिति । यवीयसां ब्रह्मादीनां सृष्टिकर्तुर्भगवतो विभूतिशेषत्वात् । एवं पूर्वपक्षाध्याये विभूतिज्ञानार्थं प्रश्नः समर्थितः ॥ ५९ ॥

---

तत्र प्रथमपक्ष इति । ज्ञानपक्षे शनैस्तिरोभावे युक्तिप्रकारो वक्तव्य इत्यर्थः । कैमुतिकन्याय इति । यत्कथयैवं तत्साक्षात्कारः कथं नेत्यर्थः ॥ ५८ ॥

---

१ एतावत्येवोपलभ्येयं टिप्पणी ।



श्रीकृष्णः ।

# परिशिष्टम्—(२)

## द्वितीयतृतीयचतुर्थस्कन्धानामवशिष्टं निबन्धकठिनांशविवेचनम् ।

आविर्भूते प्रथमे भागे यावदधिगतमिदं विवेचनं तावत्त्वाविर्भावितम् ।
परमवशिष्टं परिशिष्टे प्रकटीक्रियते ।
अतोत्रेदं विवेचनं पूर्णतयाविष्कृतमिति मन्यामहे ।

(स्कं. २) का. ३४. ७४तमे पृष्ठेनुसन्धेयम् ।

अग्रे नवमाध्यायार्थोक्तौ ब्रह्मणोपि हरिर्मूलमितिकारिकाव्याख्याने **एषा उपपत्तिः** कथागता इति, ब्रह्मणा हि नारदं प्रति यत् निरूपितं तत् न स्वतः किन्तु वैकुण्ठे सर्वं भगवति दृष्ट्वा भगवदुपदेशं च प्राप्य निरूपितमिति ब्रह्मवाक्यानां स्वस्य ब्रह्मणश्च भगवद्वाक्यं भगवांश्च मूलमित्येवं कथयाऽस्मिन् प्रकरणे निरूपणादस्य प्रकरणस्योपपत्तिरित्यर्थः ।

(स्कं. ३) का. ८२, ११०तमे पृष्ठेनुसन्धेयम् ।

तृतीयस्कन्धे दशमाध्यायार्थोक्तौ यद्येक एव पद्मकल्प इत्यादि । नवमाध्याये सात्त्विकत्वप्रार्थनानिरूपकश्लोके 'यथाह स्रक्ष्यामि पूर्ववदिदमि'तिवाक्यात् पूर्वमपि ब्रह्मणा चतुर्मुखेनैव सर्वं जगत् सृष्टमितिज्ञायते, तस्य पूर्वसृष्टस्य पुनः पद्मे लयः, अतो निरूप्यमाणादपि कल्पात् पूर्वं पद्मकल्प एव, अतः अनेन लोकान् प्राक् लीनान् अनेन पुनः कल्पितास्मीत्येवमर्थः पूर्वोक्तवाक्यैकवाक्यतयाऽवसीयते, अतः पद्मकल्पैकत्वे इदं वाक्यं नोपपद्यतेऽत एतद्वाक्यसमर्थनाय पद्मकल्पबहुत्वं निरूपितम्, पद्मकल्पबहुत्वसमर्थकेन तथाज्ञानकथनेन किं सिद्धमिति पुनः शङ्का, तस्या उत्तरं पद्मतः सर्वसम्भेदमुक्तवानिति पूर्वप्रलयोपि पश्चात्, अग्रे सर्वोत्पत्तिरपि ब्रह्मणस्तथा ज्ञानमपि पद्मं दृष्ट्वेतिपद्यादेव सर्वसम्भेदकथनार्थं द्वितीयपद्मकल्पकथोक्तेत्यर्थः ।

(स्कं. ४) का.८५. १९३तमे पृष्ठेनुसन्धेयम् ।

चतुर्थस्कन्धे अष्टमाध्यायार्थोक्तौ धर्मार्थमवतीर्णोपीति कारिकातात्पर्यं प्रकरणादावेवैतन्निरूपणेन पूर्वोक्तं निवृत्त्युपयोगित्वं समर्थितमिति, स्त्रिया जडीकृतेन पित्रा ध्रुवावमाननिरूपणेन ध्रुवस्य पितादिषु तद्राज्ये च न स्वीयत्वाग्रहः, किन्तु, स्वस्यालौकिकलौकिकार्थसाधके भगवति तद्भजने च स्वीयत्वाग्रहः, एवं निवृत्त्युपयोगित्वम् ।

(स्कं. ४) का.११८. २०४ तमे पृष्ठेनुसन्धेयम् ।

अग्रे त्रयोदशाध्यायार्थोक्तौ कल्पोत्कलौ तस्य पुत्रौ इतिकारिकाभासे—ननु ज्येष्ठयोर्वैराग्ये को हेतुरिति ध्रुवस्य प्रथमा स्त्री शिशुमारपुत्री भ्रमिस्तस्या ज्येष्ठपुत्रः कल्पः, द्वितीया स्त्री वायुपुत्री इला, तस्या ज्येष्ठपुत्र उत्कलः, एवमुभयोर्ज्येष्ठत्वं, न तु भ्रमिपुत्राद् वत्सरादुत्कलस्यापूर्वजत्वेन ज्येष्ठत्वम्, तथा सति मध्ये राज्यदशाया'मुत्पन्नो वत्सर'इतिवाक्यं विरुद्ध्येत ।

(स्कं. ४.) का.२२४. २५३तमे पृष्ठेनुसन्धेयम् ।

अग्रे एकोनत्रिंशाध्यायार्थोक्तौ मनसानुभवाच्चापि कर्मास्तित्वं विनिश्चितमिति कारिकाव्याख्याने एकेन मनोनिरूपणं त्रिभिरनुभवस्येति, श्रीभागवतस्थेन एकेन श्लोकेन 'मन एव मनुष्यस्ये'त्यनेन । अग्रे जन्म प्राप्स्यतः मोक्षं प्राप्स्यतश्च मनुष्यस्य पूर्वरूपशंसकत्वेन मनोनिरूपणम्, तेन मनोनिरूपणेनापि कर्मास्तित्वस्यैव निश्चयः, संसारावेशभगवदावेशरूपकर्मणैव पूर्वरूपज्ञापकत्वं यतस्तस्य, न तु केवलस्येति । अग्रिमैस्त्रिभिः श्लोकैर्दृष्टमश्रुतं चे'त्यादीभिर्मनसोऽनुभवो निरूप्यते, तेनापि कर्मास्तित्वस्य निश्चयः, मानसानुभवस्यापि कर्मोपस्थापितत्वात् । तथा हि, ननु पूर्वजन्मसु इन्द्रियैरनुभूतानामेवार्थानां स्वप्ने कर्मणानुभवो मनसि भवतीतियदुक्तं तन् न सम्भवति, स्वप्नेऽत्यन्तासतामपि कर्मणां मनस्यनुभवसम्भवान् न तेनेन्द्रियैः पूर्वजन्मस्वनुभवः साधयितुं शक्यते, इदानीं कर्मणा भ्रान्तिमात्रेण मानसानुभवेपि अनुभवविषयाणामत्यन्तासत्त्वादित्याशङ्क्य इदानीन्तनमानसानुभवेन पूर्वजन्मीनानुभवं पूर्वोक्तं दृढीकर्तुं युक्त्याऽनुभवविषयपरार्थसत्तां साधयति नारदः—अदृष्टेत्यादि, अदृष्टाश्रुतवस्तुनः काचित्केन मानसानुभवेन वस्तु यादृग्मनुभूतं तादृशमस्तीत्यनुमन्तव्यम् । ननु तादृशवस्तुनः अत्यन्तासत्त्वे कथमनुमानं स्यात् तत्राह 'देशकालक्रियाश्रय'मिति स्वदेशे एकपादानां मनुष्याणामभावेपि क्वचित् तादृशा अपि सन्ति, कालेषु अनुत्पद्यमाना अपि वर्षाकाले विचित्रजीवा उत्पद्यन्ते, मनुष्यैर्घटके निधाय साक्षात् हस्तितोलनासम्भवेपि कयाचित् क्रियया तदपि सम्भवति । यथा वा पीतश्यामयोर्हरिद्राकज्जलयोर्योगे हस्तिवर्णः । एवमेकेन श्लोकेन पूर्वानुभवविषयवस्तुनः सत्त्वे तदनुभवे च साधिते, इदानीं मानसोऽनुभवः कर्मणेति सिद्धम्, एवं पूर्वानुभूतानां मानसानुभव उक्तः । द्वितीयश्लोकेन 'सर्वे क्रमानुरोधेने'त्यनेन इदानीमनुभूतानां कर्मणां मानसोऽनुभव उक्तः । एवं द्वाभ्यां लौकिकं कर्म साधितम् । तृतीयश्लोकेन 'सत्त्वैकनिष्ठे' इत्यनेन युगपदखिलजगदनुभवो मानसः अलौकिककर्मणेत्युक्तम् । अत्र राहुचन्द्रदृष्टान्तेन दूरत एव सर्वं जगदनुभूयते न तु मनसि जगतः सङ्गः, तस्य सत्त्वैकनिष्ठत्वेन भगवत्पार्श्ववर्तित्वात् । एवं कर्मसाधनार्थं त्रिभिर्मानसोऽनुभवो निरूपितः ।

## इति श्रीभागवतार्थनिबन्धकठिनांशविवेचनम् ।

## ॥ इति प्रथमं परिशिष्टं समाप्तम् ॥

॥ श्रीवल्लभपादपद्मरेणुः शरणम् ॥